च्यत्वात्, इति जम्बूद्वीपावश्यकम्, यद्वा-'जंबूदीवगआवस्सगं' इत्यस्य 'जम्बूद्वीपगावश्यकमि'-तिच्छाया, तत्पक्षे-जम्बूद्वीपं गच्छतीति जम्बूद्वीपगं-जम्बूद्वीपगतं, तच्चतदावश्यकं वस्तुजातं जम्बूद्वीपगावश्यकमित्यर्थः, इह तु शब्दः पादपूरणार्थः, कुत आरभ्य कियत्पर्यन्त जम्बूद्वीपका (गा) वश्यकं भणनीयमित्यपेक्षायामाह-" कालाओ चूलिया जावे "-ति-कालादारभ्य चूलिकां यावत्-सुषमसुषमा रूपकालालापकादारभ्य चूलिका-मन्दरचूलिकालापकपर्यन्तं यद्वस्तुजातमुक्तं तत् धातकीखण्डे पुष्करवरे च द्वीपे " पुव्वावरे " पूर्वापरे-पूर्वंचापरंचेत्यनयोः समाहारः पूर्वापरं तस्मिन् पूर्वापरे पूर्वे पश्चिमे च 'पासे' पार्श्वे-भागे, यद्वा-धातकीखण्ड-पुष्करवरद्वीपयोः प्रत्येकं पूर्वापरेषु पौरस्त्यपाश्चात्येषु वर्षेषु वा क्षेत्रेषु समसंख्यकं बोध्यं न तु न्यूनाधिकमिति भावः ॥ सू० ६२ ॥

पूर्वं जम्बूद्वीपे कूटाऽऽवृतक्षेत्राणि निरूपितानि, सम्प्रति जम्बूद्वीपस्य द्वाराणि निरूपयितुमाह—

**मूलम्—जंबुद्दीवस्स णं दीवस्स चत्तारि दारा पण्णत्ता, तं जहा-विजये १, वेजयंते २, जयंते ३, अपराजिए ४। ते णं दारा चत्तारि जोयणाइं विक्खंभेणं तावइयं चेव पवेसेणं पण्णत्ता। तत्थ णं चत्तारि देवा महिड्ढिया जाव पलिओवमाट्ठिइआ परिवसंति-विजए १, वेजयंते २, जयंते ३, अपराजिए ४ ॥सू०६३॥**

छाया—जम्बूद्वीपस्य खलु द्वीपस्य चत्वारि द्वाराणि प्रज्ञप्तानि, तद्यथा-विजयं १, वैजयन्तं २, जयन्तम् ३, अपराजितम् ४। तानि खलु द्वाराणि चत्वारि

---

**जम्बूद्वीपमें कथित समस्त वस्तुजात जो कि यहां सुषम सुषमा कालसे लेकर मन्दरचूलिका तक प्रगट किया गया है, धातकीखण्डके पूर्वार्ध और पश्चिमार्धमें, और पुष्करार्धके पूर्वार्ध एवं-पश्चिमार्धमें यथावत् कहना चाहिये ॥ सू० ६० ॥**

**" जंबुदीवस्स णं दीवस्स चत्तारि दारा पण्णत्ता " इत्यादि— जम्बूद्वीपके चार द्वार कहे गये हैं। विजय १, वैजयन्त २,**

---

જાતનો એટલે કે સુષમ સુષમાકાળથી લઈને મન્દર ચૂલિકા પર્યન્તના ઉપર્યુક્ત કથનમાં જેનો જેનો નિર્દેશ થયો છે તે વસ્તુઓનો-ધાતકીખંડના પૂર્વાર્ધમાં અને પશ્ચિમાર્ધમાં, તથા પુષ્કરવર દ્વીપાર્ધના પૂર્વાર્ધ અને પશ્ચિમાર્ધમાં પણ સદ્ભાવ છે, એમ સમજવું ॥ સૂ. ૬૦ ॥

જંબૂદ્વીપમાં કૂટયુક્ત ક્ષેત્રોનું નિરૂપણ કરીને હવે સૂત્રકાર જંબૂદ્વીપના

योजनानि विष्कम्भेण तावन्त्येव प्रवेशेन प्रज्ञप्तानि। तत्र खलु चत्वारो देवा महर्द्धिकाः यावत् पल्योपमस्थितिकाः परिवसन्ति–विजयः १, वैजयन्तः २, जयन्तः ३, अपराजितः ४ ॥ सू० ६३ ॥

टीका—' जंबूदीवस्स णं ' इत्यादि—जम्बूद्वीपस्य विजय–वैजयन्त–जयन्तापराजितनामकानि चत्वारि द्वाराणि सन्ति। तानि च द्वाराणि विष्कम्भेण–द्वारोभयभागस्थितकुड्यान्तरालभागविस्तारेण चत्वारि योजनानि तथा–प्रवेशेन=प्रवेशस्थानप्रमाणेन–कुड्यस्थौल्येन तावन्त्येव=चत्वारि योजनान्येव प्रज्ञप्तानि। उच्चत्वं चाष्ट योजनानीति, उक्तञ्च–" चउजोयणवित्थिन्ना, अट्ठेव य जोयणाणि उव्विद्धा "–छाया–चतुर्योजनविस्तीर्णानि अष्टैव च योजनानि उद्विद्धानि–उच्चानि ॥ इति। तथा–तत्र–तेषु विजयादिषु द्वारेषु चत्वारो देवाः महर्द्धिकाः=विशालऋद्धिशालिनः ' ' जाव ' यावत्–अत्र यावच्छब्देन–महाद्युतिकाः, महाबलाः, महायशसः, महासौख्याः, इति ग्राह्यम् अर्थः स्पष्ट एव। पल्योपम-

---

जयन्त ३, अपराजित ४। ये द्वार विष्कम्भकी अपेक्षा चार योजन प्रमाण और प्रवेशकी अपेक्षा भी इतनेही कहे गये हैं। इनमें चार महर्द्धिक देव यावत् एक पल्योपम स्थितिवाले रहते हैं।

द्वारकी दोनों ओरकी दोनों दीवालों के अन्तरालों का विष्कम्भ [ विस्तार ] चार योजनका है, तथा–भीतोंकी स्थूलतारूप जो प्रवेश है वहभी चार योजनप्रमाण है। कहाभी है—" चउजोयणवित्थिन्ना " चार योजनके विस्तार इत्यादि.

तथा—आठ योजन तक ये ऊंचे हैं। " महर्द्धिका यावत् पल्योपम स्थितिकाः " में जो यावत् पद आया है उससे यहां " महाद्युतिकाः,

---

દ્વારોની પ્રરૂપણા કરે છે—" जवुदीवस्स णं दीवस्स चत्तारि दारा पण्णत्ता " ઇત્યાદિ—

જમ્બૂ નામના દ્વીપને ચાર દ્વાર કહ્યાં છે, તેમનાં નામ આ પ્રમાણે છે. (૧) વિજય, (૨) વૈજયન્ત, (૩) જયન્ત અને (૪) અપરાજિત. તે દ્વારોનો વિષ્કંભ ( પહોળાઈ ) ચાર યોજનપ્રમાણ છે અને પ્રવેશની અપેક્ષાએ પણ તેમને ચાર યોજનપ્રમાણ જ કહ્યાં છે તેમાં મહર્દ્ધિક આદિ વિશેષણવાળા ચાર દેવ રહે છે, તેમની એક પલ્યોપમની સ્થિતિ કહી છે. દ્વારની બન્ને તરફની દીવાલોના અન્તરાલનો વિષ્કંભ ( વિસ્તાર ) ચાર યોજનનો છે. તથા દીવાલોની સ્થૂલતા રૂપ જે પ્રવેશ છે તે પણ ચાર યોજનપ્રમાણ છે કહ્યુ પણ છે કે–" चउजोयणवित्थिन्ना " ઇત્યાદિ ચાર યોજનના વિસ્તારવાળા તે દ્વારો આઠ યોજન પર્યંત ઊંચા છે. " महर्द्धिका यावत् पल्योपमस्थितिकाः " આ સૂત્રપાઠમા જે " यावत् " પદ છે, તેના દ્વારા મહાદ્યુતિ સંપન્ન, મહાબલ સંપન્ન, મહાયશ સંપન્ન અને મહાસુખ

स्थितिकाः=पल्योपमकालपर्यन्तस्थायिनो द्वारनामसदृशनामकाः परिवसन्ति, तेच विजयः १, वैजयन्तः २, जयन्तः ३, अपराजितः ४, इति,
उक्तं च-" पलिओवमट्ठिइया, सुरगणपरिवारिया सदेवीया ।
एएसु दारनामा, वसंति देवा महिड्ढीया ॥ १ ॥ "
छाया-" पल्योपमस्थितिकाः सुरगणपरिवृताः सदेवीकाः ।
एतेषु द्वारनामानो वसन्ति देवा महर्द्धिकाः ॥१॥ " इति । सू० ६३

अनन्तरं जम्बूद्वीपस्य द्वाराणि निरूपितानि, सम्प्रति जम्बूद्वीपस्थान् अन्तर द्वीपान् निरूपयितुमाह—

**मूलम्—जंबुद्दीवे दीवे मंदरस्स पव्वयस्स दाहिणेणं चुल्लहिमवंतस्स वासहरपव्वयस्स चउसु विदिसासु लवणसमुद्दं तिन्नि तिन्नि जोयणसयाइं ओगाहित्ता एत्थ णं चत्तारि अंतरदीवा पण्णत्ता, तं जहा-एगूरुयदीवे१, आभासियदीवे२, वेसाणियदीवे ३, णंगोलियदीवे४ । तेसु णं दीवेसु चउव्विहा मणुस्सा परिवसंति, तं जहा-एगूरुआ१, आभासिआ२, वेसाणिया३, णंगोलिया४। तेसिणं दीवाणं चउसु विदिसासु लवणसमुद्दं चत्तारि२, जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पण्णत्ता, तं**

---

महाबलाः, महायशसाः, महासौख्याः " इस पाठका संग्रह हुवाहै । इन चार द्वारोंपर जो चार देव रहते हैं उनके नाम द्वारके नामानुसार हैं । इस तरह उन देवोंके नाम क्रमशः विजय-वैजयन्त-जयन्त और अपराजित हैं । कहाभी है-" पलिओवमट्ठिइया " इत्यादि, वे देव पल्योपमकी स्थिति वाले हैं द्वारमें रहने वाला प्रत्येक देव सुरगणोंसे सदा परिवृत रहता है और अपनी-२ देवियोंसे युक्त बना रहताहै ॥सू०६३॥

---

સંપન્ન આ ચાર વિશેષણો ગ્રહણ કરવા જોઈએ. તે ચાર દ્વાર પર જે ચાર દેવો રહે છે તેમનાં નામ પણ દ્વારોનાં નામાનુસાર છે. એટલે કે વિજય, વૈજયન્ત, જયન્ત અને અપરાજિત છે. કહ્યું પણ છે કે " पलिओवमट्ठिइया " ઇત્યાદિ એક પલ્યોપમની સ્થિતિ છે. તે દેવો સદા સુરગણો અને દેવીઓના પરિવારથી પરિવૃત્ત રહે છે. ॥ સૂ. ૬૩ ॥

जहा-हयकन्नदीवे१, गयकन्नदीवे२, गोकन्नदीवे३, संकुलिकन्न-दीवे४। तेसु णं दीवेसु चउव्विहा मणुस्सा परिवसंति, तं जहा-हयकन्ना १, गयकन्ना २, गोकन्ना ३, संकुलिकन्ना ४। तेसिणं दीवाणं चउसु विदिसासु लवणसमुद्दं पंच २, जोयणसयाइं ओगाहित्ता एत्थ णं चत्तारि अंतरदीवा पण्णत्ता, तं जहा—आयंसमुहदीवे १, मेंढमुहदीवे२, अओमुहदीवे ३, गोमुहदीवे४। तेसु णं दीवेसु चउव्विहा मणुस्सा भाणियव्वा। तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं छछजोयणसयाइं ओगा-हेत्ता एत्थ णं चत्तारि अंतरदीवा पण्णत्ता, तं जहा-आसमुह-दीवे १, हत्थिमुहदीवे २, सीहमुहदीवे३, वग्घमुहदीवे ४। तेसु णं दीवेसु मणुस्सा भाणियव्वा। तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं सत्त सत्त जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पण्णत्ता, तं जहा-आसकन्नदीवे १, हत्थिकन्नदीवे २, अकन्नदीवे ३, कन्नपाउरणदीवे ४। तेसु णं दीवेसु मणुया भाणियव्वा। तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं अट्ठट्ठ जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पण्णत्ता, तं जहा-उक्कामुहदीवे१, मेहमुहदीवे२, विज्जुमुहदीवे३, विज्जुदंतदीवे४। तेसु णं दीवेसु मणुस्सा भाणियव्वा। तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं णव णव जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पण्णत्ता, तं जहा—घणदंतदीवे१, लट्ठदंतदीवे२, गूढदंतदीवे३,

सुद्धदंतदीवे४। तेसु णं दीवेसु चउव्विहा मणुस्सा परिवसंति, तं जहा-घणदंता१, लट्ठदंता२, गूढदंता३, सुद्धदंता४,

जंबुद्दीवे दीवे मंदरस्स पव्वयस्स उत्तरेणं सिहरिस्स वासहरपव्वयस्स चउसु विदिसासु लवणसमुद्दं तिन्नि तिन्नि जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पण्णत्ता, तं जहा-एगूरुयदीवे, सेसं तहेव निरवसेसं भाणियव्वं जाव सुद्धदंता ॥सू०६४

छाया-जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य दक्षिणेन क्षुद्रहिमवतो वर्षधरपर्वतस्य चतसृषु विदिक्षु लवणसमुद्रं त्रीणि त्रीणि योजनशतानि अवगाह्य अत्र खलु चत्वारोऽन्तरद्वीपाः प्रज्ञप्ताः, तद्यथा-एकोरुकद्वीपः १, आभाषिकद्वीपः २, वैषाणिकद्वीपः ३, लाङ्गूलिकद्वीपः ४। तेषु खलु द्वीपेषु चतुर्विधा मनुष्याः परिवसन्ति, तद्यथा-एकोरुकाः १, आभाषिकाः २, वैषाणिकाः ३, लाङ्गूलिकाः ४। तेषां खलु

इस तरह जम्बूद्वीपके द्वारोंका निरूपण करके अब सूत्रकार जम्बूद्वीपस्थ अन्तरद्वीपोंका निरूपण करते हैं।

" जम्बुद्दीवे दीवे मंदरस्स पव्वयस्स " इत्यादि—

जम्बूद्वीप नामके द्वीपमें सुमेरु पर्वतकी दक्षिण दिशामें क्षुद्रहिमवान् नामका वर्षधर पर्वत है। उसकी चारों विदिशाओंमें लवण समुद्रको तीन तीन सौ योजन तक अवगाहित करके चार अन्तरद्वीप कहे गये हैं। उनके नाम इस प्रकारसे हैं। एकोरुक द्वीप, आभाषिक द्वीप, वैषाणिक द्वीप और लाङ्गूलिक द्वीप, इन द्वीपोंमें चार प्रकारके मनुष्य रहते हैं। जैसे—एक उरूवाले एकोरूक १, आभाषिक २, वैषाणिक ३ और

આ રીતે જંબૂદ્વીપના દ્વારોનું નિરૂપણ કરીને હવે સૂત્રકાર જંબૂદ્વીપસ્થ અન્તરદ્વીપોનું નિરૂપણ કરે છે—

" जंबुद्दीवे दीवे मंदरस्स पव्वयस्स " ઈત્યાદિ—

જંબૂદ્વીપ નામના દ્વીપમાં સુમેરુ (મન્દર) પર્વતની દક્ષિણ દિશામાં ક્ષુદ્રહિમવાન્ નામનો વર્ષધર પર્વત છે. તેની ચારે દિશાઓમાં લવણ સમુદ્રને ૩૦૦-૩૦૦ યોજન પાર કરવાથી ચાર અન્તરદ્વીપ આવે છે. તેમનાં નામ આ પ્રમાણે છે—(૧) એકોરુક દ્વીપ, (૨) આભાષિક દ્વીપ, (૩) વૈષાણિક દ્વીપ અને (૪) લાંગૂલિક દ્વીપ. તે દ્વીપોમાં ચાર પ્રકારના મનુષ્યો રહે છે જેમ

द्वीपानां चतसृषु विदिक्षु लवणसमुद्रं चत्वारि योजनशतानि अवगाह्य अत्र खलु चत्वारोऽन्तरद्वीपाः प्रज्ञप्ताः, तद्यथा-हयकर्णद्वीपः १, गजकर्णद्वीपः २, गोकर्णद्वीपः ३, शष्कुलिकर्णद्वीपः ४। तेषु द्वीपेषु चतुर्विधा मनुष्याः परिवसन्ति, तद्यथा-हयकर्णाः १, गजकर्णाः २, गोकर्णाः ३, शष्कुलिकर्णाः ४। तेषां खलु द्वीपानां चतसृषु विदिक्षु लवणसमुद्रं पञ्च २ योजनशतानि अवगाह्य अत्र खलु चत्वारोऽन्तरद्वीपाः प्रज्ञप्ताः, तद्यथा-आदर्शमुखद्वीपः १, मेढ्रमुखद्वीपः २, अयोमुखद्वीपः ३, गोमुखद्वीपः ४। तेषु खलु द्वीपेषु चतुर्विधा मनुष्या भणितव्याः। तेषां खलु द्वीपानां

लाङ्गूलिक ४, इन द्वीपोंकी चारों विदिशाओंमें लवण समुद्रको चार-२ सौ योजन तक अवगाहित करके दूसरे और चार अन्तरद्वीप कहे गये हैं। उनके नाम इस प्रकार हैं-हयकर्ण द्वीप, गजकर्ण द्वीप, गोकर्ण द्वीप और शष्कुलिकर्ण द्वीप ४। इन द्वीपोंमें चार प्रकारके मनुष्य रहते हैं, हयकर्ण १ गजकर्ण २ गोकर्ण ३ शष्कुलिकर्ण ४। इन द्वीपोंकी चारों विदिशाओंमें लवणसमुद्रको पांच पाँचसौ योजन तक अवगाहित करके और चार द्वीप हैं।

आदर्श मुखद्वीप १, मेढ्र मुखद्वीप २, आयोमुख द्वीप ३, और गोमुख द्वीप, इनमें चार प्रकारके मनुष्य रहते हैं जैसे-आदर्शमुख १, मेढ्रमुख २, अयोमुख ३ गोमुख ४। उन द्वीपोंकी चारों विदिशाओंमें भी लवण समुद्रको अवगाहन करके छहसौ छहसौ - योजन तक और चार अन्तरद्वीप हैं। उनके नाम इस प्रकारके है—अश्वमुख १, हस्तिमुख २, सिंहमुख ३, व्याघ्रमुख द्वीप ४। इनमें इन

કે....એક ઉરુવાળા એકોરુક, આભાષિક, વૈષાણિક અને લાંગલિક તે દ્વીપોની ચારે વિદિશાઓમાં લવણ સમુદ્રને ચારસો- ચારસો યોજન અવગાહિત (પાર) કરવાથી બીજા ચાર અન્તરદ્વીપો આવે છે. તેમનાં નામ આ પ્રમાણે છે—(૧) હયકર્ણ દ્વીપ, (૨) ગજકર્ણ દ્વીપ, (૩) ગોકર્ણ દ્વીપ અને (૪) શષ્કુલિકર્ણ દ્વીપ. તે દ્વીપોમાં ચાર પ્રકારના મનુષ્યો રહે છે—(૧) હયકર્ણ, (૨) ગજકર્ણ, (૩) ગોકર્ણ અને (૪) શષ્કુલીકર્ણ. તે દ્વીપોની ચારે વિદિશાઓમાં, લવણ સમુદ્રને ૫૦૦-૫૦૦ યોજન અવગાહિત કરવાથી બીજા ચાર દ્વીપો આવે છે તેમનાં નામ આ પ્રમાણે છે—(૧) આદર્શમુખ દ્વીપ, (૨) મેઢ્રમુખ દ્વીપ, (૩) અયોમુખ દ્વીપ અને (૪) ગોમુખ દ્વીપ. તેમાં ચાર પ્રકારના મનુષ્યો રહે છે—(૧) આદર્શમુખ, (૨) મેઢ્રમુખ, (૩) અયસમુખ અને (૪) ગોમુખ.

તે દ્વીપોની ચારે વિદિશાઓમાં લવણ સમુદ્રને ૬૦૦-૬૦૦ યોજન અવગાહિત કરવાથી બીજા ચાર અન્તરદ્વીપો આવે છે, તેમનાં નામ આ આ પ્રમાણે છે—(૧) અશ્વમુખ, (૨) હસ્તિમુખ, (૩) સિંહમુખ અને (૪)

चतसृषु विदिक्षु लवणसमुद्रं षट्षड् योजनशतानि अवगाह्य अत्र खलु चत्वारोऽन्तरद्वीपाः प्रज्ञप्ताः, तद्यथा-अश्वमुखद्वीपः १, हस्तिमुखद्वीपः २, सिंहमुखद्वीपः ३, व्याघ्रमुखद्वीपः ४। तेषु खलु द्वीपेषु मनुष्या भणितव्याः। तेषां खलु द्वीपानां चतसृषु विदिक्षु लवणसमुद्रं सप्त सप्त योजनशतानि अवगाह्य अत्र खलु चत्वारोऽन्तरद्वीपाः प्रज्ञप्ताः, तद्यथा-अश्वकर्णद्वीपः १, हस्तिकर्णद्वीपः २, अकर्णद्वीपः ३, कर्णप्रावरणद्वीपः ४। तेषु खलु द्वीपेषु मनुष्या भणितव्याः। तेषां खलु द्वीपानां चतसृषु विदिक्षु लवणसमुद्रमष्टाष्टयोजनशतानि अवगाह्य अत्र खलु चत्वारोऽन्तरद्वीपाः प्रज्ञप्ताः, तद्यथा-उल्कामुखद्वीपः १, मेघमुखद्वीपः २, विद्युन्मुखद्वीपः ३,

---

प्रत्येक द्वीप के नामानुगुणवाले मनुष्य रहा करते हैं। उन द्वीपोंकी भी चारों विदिशाओंमें सात-सातसौ योजन तक लवण समुद्रको अवगाहन करके और चार अन्तरद्वीप हैं। अश्वकर्ण १, हस्तिकर्ण २, अकर्ण ३, कर्णप्रावरण द्वीप ४ हैं। यहांभी द्वीपके नाम जैसे गुणवाले मनुष्य बसते हैं। इन द्वीपोंकी चार विदिशाओंमें लवण समुद्रको आठसौ आठसौ योजन तक अवगाहन करके चार अन्तरद्वीप और कहे गये है—ये चारके नाम इस प्रकार है उल्कामुख द्वीप, मेघमुख द्वीप, विद्युन्मुख द्वीप, विद्युद्दन्त द्वीप ४ इनमें मनुष्य कह लेना चाहिये। इन द्वीपोंकी चारोंही विदिशाओंमें लवणसमुद्रको नौसौ नौसौ योजन तक अवगाहन करके चार अन्तरद्वीप और हैं। जैसे-घनदन्त द्वीप १, लष्टदन्त द्वीप २, गूढदन्त द्वीप ३ और चौथा शुद्धदन्त ४। इन द्वीपोंमें चार प्रकारके मनुष्य होतेहैं। घनदन्त१, लष्टदन्त२, गूढ-

---

વ્યાઘ્રમુખ દ્વીપ તે પ્રત્યેક દ્વીપમાં તેમનાં નામ પ્રમાણે ગુણવાળા મનુષ્યો રહે છે તે ચારે દ્વીપોની વિદિશાઓમાં, લવણ સમુદ્રને ૭૦૦-૭૦૦ યોજન અવગાહિત કરવાથી બીજા ચાર અન્તરદ્વીપો આવે છે તેમનાં નામ આ પ્રમાણે છે—(૧) અશ્વકર્ણ, (૨) હસ્તિકર્ણ, (૩) અકર્ણ અને (૪) કર્ણ પ્રવરણ દ્વીપ. તે ચારે દ્વીપોમાં પણ તે દ્વીપના નામ પ્રમાણે ગુણવાળા મનુષ્યો રહે છે. તે ચારે દ્વીપોની વિદિશાઓમાં, લવણ સમુદ્રને ૮૦૦-૮૦૦ યોજન અવગાહિત કરવાથી બીજા ચાર અન્તરદ્વીપો આવે છે—(૧) ઉલ્કામુખ દ્વીપ, (૨) મેઘમુખ દ્વીપ, (૩) વિદ્યુન્મુખ દ્વીપ અને (૪) વિદ્યુતદન્ત દ્વીપ તેમાં પણ મનુષ્યોનું ઉપર મુજબજ કથન સમજવું. તે ચારે અન્તરદ્વીપોની ચાર વિદિશાઓમાં, લવણ સમુદ્રને ૯૦૦-૯૦૦ યોજન અવગાહિત કરવાથી બીજા ચાર અન્તરદ્વીપ આવે છે તેમનાં નામ આ પ્રમાણે છે—(૧) ઘનદન્ત દ્વીપ, (૨) લષ્ટદન્ત દ્વીપ,

विद्युद्दन्तद्वीपः ४, तेषु खलु द्वीपेषु मनुष्या भणितव्याः । तेषां खलु द्वीपानां चतसृषु विदिक्षु लवणसमुद्रं नव नव योजनशतानि अवगाह्य अत्र खलु चत्वारोऽन्तरद्वीपाः प्रज्ञप्ताः, तद्यथा–घनदन्तद्वीपः १, लष्टदन्तद्वीपः २, गूढदन्तद्वीपः ३, शुद्धदन्तद्वीपः ४। तेषु खलु द्वीपेषु चतुर्विधा मनुष्याः परिवसन्ति, तद्यथा–घनदन्ताः १, लष्टदन्ताः २, गूढदन्ताः ३, शुद्धदन्ताः ४।

जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य उत्तरेण शिखरिणो वर्षधरपर्वतस्य चतसृषु विदिक्षु लवणसमुद्रं त्रीणि त्रीणि योजनशतानि अवगाह्य अत्र खलु चत्वारोऽन्तरद्वीपाः प्रज्ञप्ताः, तद्यथा–एकोरुकद्वीपः शेषं तथैव निरवशेषं भणितव्यं यावत् शुद्धदन्ता । सू० ६३ ।

टीका—" जंबूद्दीवे २ " इत्यादि—स्पष्टम्, नवरं–चुल्लहिमवंतस्य वासहरपव्वयस्से–" ति–क्षुद्रहिमवतो–महाहिमवदपेक्षया लघुहिमवतो वर्षधरपर्वतस्य, तस्य हि पूर्वभाग–पश्चिमभागयोः प्रत्येकं शाखाद्वयं विद्यत इति वृद्धाः ।

---

दन्त३, शुद्धदन्त ४। जम्बूद्वीपनामके द्वीपमें मन्दर पर्वतकी उत्तर दिशामें वर्तमान शिखरी वर्षधर पर्वतकी चार विदिशाओंमें लवणसमुद्रको अवगाहन करके तीनसौ तीनसौ योजन तक चार अन्तरद्वीप कहे गये हैं जैसे–एकोरुक द्वीप१ आदि बाकीका और सब कथन शुद्धदन्त तक ऊपर का जैसा जानना चाहिये ।

टीकार्थ––हिमवान्में महाहिमवान्की अपेक्षासे ' क्षुद्र ' विशेषण है। यह–क्षुद्रहिमवान् पर्वत भरतक्षेत्रकी सीमापर है, इसके दोनों छोर पूर्व–पश्चिम लवण समुद्रमें फैले हैं । ऐसे ही ऐरवत क्षेत्रकी सीमापर स्थित शिखरी पर्वतके दोनों छोर भी लवण समुद्रमें फैले हुवे है ।

---

(४) ગૂઢદન્ત દ્વીપ અને (૪) શુદ્ધદન્ત દ્વીપ તે દ્વીપોમાં ક્રમશઃ ચાર પ્રકારના મનુષ્યો વસે છે—(૧) ઘનદન્ત, (૨) લષ્ટદન્ત, (૩) ગૂઢદન્ત, અને (૪) શુદ્ધદન્ત.

જંબૂદ્વીપ નામના દ્વીપના મન્દર પર્વતની ઉત્તર દિશામાં જે શિખરિ વર્ષધર પર્વત આવેલો છે, તેની ચારે વિદિશાઓમા લવણ સમુદ્રને ૩૦૦–૩૦૦ યોજન પાર કરવાથી ચાર અન્તરદ્વીપો આવે છે. તેમનાં નામ આ પ્રમાણે છે—(૧) એકોરુક દ્વીપ, આદિ બાકીનું સમસ્ત કથન એટલે કે શુદ્ધદન્ત પર્યન્તનુ કથન ઉપર મુજબ જ સમજવું.

વિશેષાર્થ—મહાહિમવાન્ કરતાં નાનો હોવાને કારણે ક્ષુદ્રહિમવાનને ક્ષુદ્ર વિશેષણ લગાડયુ છે તે ક્ષુદ્રહિમવાન્ પર્વત ભરતક્ષેત્રની સીમાપર છે, તેના બન્ને છેડા પૂર્વ–પશ્ચિમ લવણ સમુદ્ર સુધી વિસ્તરેલા છે. એ જ પ્રમાણે ઐરવત ક્ષેત્ર સીમાપર આવેલા શિખરી પર્વતના બન્ને છેડા પણ લવણ સમુદ્ર

"चउसु विदिसासु" इत्यादि—चतसृषु विदिक्षु पूर्वोत्तरादिषु लवणसमुद्रं त्रीणि त्रीणि योजनशतानि अवगाह्य—अतिक्रम्य ये शाखाविभागाः सन्ति, 'एत्थ' इति—अत्र—शाखाविभागेषु खलु चत्वारः अन्तरद्वीपाः—अन्तरे—मध्ये द्वीपा अन्तरद्वीपाः—समुद्रमध्यवर्तिद्वीपाः, प्रज्ञप्ताः—कथिताः, यद्वा 'अन्तरद्वीपाः' इत्यस्यायमर्थः—अन्तरं—परस्परविभागः, तत्प्रधाना द्वीपा अन्तरद्वीपाः, मध्यमपदलोपिसमासोऽत्रबोध्यः। तत्र पूर्वोत्तरदिशि ईशानकोणे एकोरुकनामा योजनशतत्रयाऽऽयामविष्कम्भोऽन्तरद्वीपोऽस्ति। अनेन प्रकारेण आग्नेयी – नैर्ऋती–वायव्यासु विदिक्षु क्रमेणाऽऽभाषिकवैषाणिक–लाङ्गूलिकाख्यास्त्रयोऽन्तरद्वीपा अपि बोध्याः।

प्रत्येक छोर दो दो भागोंमें विभक्त हैं, ये दोनोंके आठों भाग लवण समुद्रमें फैले हैं। यही बात यहां–"पूर्वभाग–पश्चिमभागयोः प्रत्येकं शाखाद्वयं विद्यते" इतिवृद्धाः–पूर्वभाग और पश्चिम भाग में प्रत्येक में दो दो शाखा हैं इस बातसे प्रदर्शित की गई है।

"चउसु विदिसासु" इत्यादि—

तीनसौ तीनसौ योजनप्रमाण लवण समुद्रका उल्लंघन करके पूर्वोत्तर विदिशाओंकी ओर जो शाखाविभाग–छोर–है, उन शाखाविभागोंपर चार अन्तरद्वीप हैं, समुद्रके मध्यमें जो द्वीप हैं वे अन्तरद्वीप हैं, अथवा परस्परमें विभागप्रधानद्वीप अन्तरद्वीप हैं। ईशान कोणमें तीनसौ योजन प्रमाण आयाम विष्कम्भवाला एकोरुक है नामका अन्तरद्वीप हैं, इसी प्रकारसे आग्नेयी–नैर्ऋती और वायवी विदिशाओंमें क्रमसे आभाषिक, वैषाणिक, लाङ्गूलिक नामके तीन अन्तरद्वीप और भी हैं। ऐसे

સુધી વિસ્તરેલા છે પ્રત્યેક છેડા બબ્બે ભાગોમાં વિભક્ત થયેલા હોવાથી બંને પર્વતોના મળીને કુલ આઠ ભાગો (છેડાઓ) લવણુ સમુદ્ર સુધી વ્યાપેલા છે. એ જ વાત અહીં સૂત્રપાઠ દ્વારા વ્યક્ત થઈ છે. "पूर्वभाग–पश्चिम भागयोः प्रत्येकं शाखाद्वय विद्यते इतिवृद्धाः" પૂર્વ ભાગ અને પશ્ચિમ ભાગમાં દરેકમાં બબ્બે શાખાઓ છે

"चउसु विदिसासु" ઇત્યાદિ—લવણુ સમુદ્રમાં ૩૦૦–૩૦૦ યોજન પ્રમાણુ અંતર ઓળંગવાથી, ઈશાન આદિ ચારે વિદિશાઓમાં જે શાખાવિભાગ રૂપ છેડા છે, તે શાખાવિભાગ રૂપ છેડા પર ચાર અંતરદ્વીપો છે. (સમુદ્રની મધ્યમાં હોય એવા દ્વીપોને અંતરદ્વીપો કહે છે, અથવા પરસ્પરમાં વિભાગ પ્રધાન દ્વીપને અંતરદ્વીપ કહે છે) ઈશાન કોણુમાં ૩૦૦ યોજન પ્રમાણુ લંબાઈ પહોળાઈવાળો એકોરુક નામનો અંતરદ્વીપ છે. એ જ પ્રમાણે અગ્નિ, નૈઋત્ય અને વાયવ્યકોણુમાં અનુક્રમે આભાષિક, વૈષાણિક અને લાંગલિક

इत्थं क्षुद्रहिमवतश्चतसृषु विदिक्षु एकोरुकादयश्चत्वारोऽन्तरद्वीपा भवन्ति, इति। तेषु चतुर्विधा मनुष्या वसन्ति, सूत्रे 'चतुर्विधा' इति बहुवचनेन निर्देशस्तु द्वीपसमुदायगतबहुत्वापेक्षया न तु प्रतिद्वीपमपेक्ष्येति, अतः क्रमेण तेऽन्तरद्वीपेषु योजनीयाः, तत्रस्था मनुष्या एकोरुकादिद्वीपसमानामान एव भवन्ति। ते च पुरुषा दर्शने स्वरूपतो मनोहराः सुन्दराङ्गोपाङ्गा भवन्ति ।१।

इति प्रथमद्वीपनिरूपणा १।

अथ द्वितीयद्वीपनिरूपणा २—

"तेसि णं दीवाणं" इत्यादि—तेषाम्-एकोरुकादीनां द्वीपानां चतसृषु विदिक्षु-ऐशान्याग्नेयीनैर्ऋतीवायव्यासु प्रतिविदिक्षु लवणसमुद्रं चत्वारि योजनशतान्युल्लङ्घ्य चतुर्योजनशताऽऽयामविस्तारा हयकर्णादयश्चत्वारोऽन्तरद्वीपास्तन्नामान एव तत्र मनुष्या अपि परिवसन्ति, इति बोध्यम्। एवं येषां द्वीपानां यात्र-

---

ये चार अन्तरद्वीप हिमवान् पर्वतको चार विदिशाओंमें हैं। इन अन्तरद्वीपोंमें चार प्रकारके मनुष्य रहते हैं।

यहां जिन जिन नामोंके अन्तरद्वीप कहे गये हैं। वहां उन्हीं नामोंसे प्रसिद्ध मनुष्य रहते हैं, ये देखनेमें मनोहर होते हैं और रूपसेभी मनोहर होते हैं। इनके अङ्ग-उपाङ्ग सुन्दर होते हैं १ इन एकोरुक आदि द्वीपोंकी चारों विदिशाओंमें ईशान, अग्नि, नैर्ऋतो, वायव्या कोन इनमेंसे प्रत्येक विदिशामें लवण समुद्रको चारसौ योजन उल्लंघन करके चारसौ योजनके आयाम विस्तारवाले हयकर्ण आदिक चार अन्तरद्वीप हैं, इनमें-इन्हींके जैसे नामवाले मनुष्य रहते हैं। इस प्रकारसे द्वितीय

---

નામના બીજા ત્રણ અંતરદ્વીપો છે. એવાં તે ચાર અંતરદ્વીપો હિમવાન્ પર્વતની ચાર વિદિશાઓમાં (ઈશાનાદિ ખૂણાઓમાં) છે. તે અંતરદ્વીપોમાં ચાર પ્રકારના મનુષ્યો વસે છે. "ચતુર્વિધા." આ બહુવચનનું પદ પ્રત્યેક દ્વીપગત મનુષ્યોની અપેક્ષાએ વપરાયું નથી, પણ ચારે દ્વીપોના સમુદાયના મનુષ્યો માટે વપરાયુ છે. ત્યાં જે નામના દ્વીપો કહ્યા છે, એ જ નામથી ઓળખાતા મનુષ્યો રહે છે તેમનો દેખાવ મનોહર હોય છે, તેઓ મનોહર રૂપસંપન્ન અને અંગોપાંગની સુંદરતાવાળા હોય છે.

એકોરુક આદિ ચાર અંતરદ્વીપોની વિદિશાઓમાં ઈશાન, અગ્નિ, નૈઋત્ય અને વાયવ્યમાં, લવણ સમુદ્રને ૪૦૦-૪૦૦ યોજન પાર કરીને આગળ જવાથી ૪૦૦-૪૦૦ યોજનની લંબાઈ પહોળાઇવાળા હયકર્ણ આદિ ચાર અંતરદ્વીપો આવે છે. તે અંતરદ્વીપોમાં તેમના જેવા જ નામવાળા મનુષ્યો રહે છે આ

दन्तरं तेषां तावदेवाऽऽयामविस्तारप्रमाणं यावत्सप्तमानां नवशतान्यन्तरं तावदेव च तत्प्रमाणमिति, एते संकलिताः सर्वेऽप्यष्टाविंशतिर्द्वीपा भवन्ति। अत्र मनुष्यास्तु युग्मजाताः पल्योपमासंख्येयभागाऽऽयुषोऽष्टधनुःशतोन्नताः। तथा-ऐरावतक्षेत्रविभाजकस्य शिखरिपर्वतस्याप्यनेनैव पूर्वोत्तरादिविदिक्षु क्रमेणैतन्नामका एवान्तरद्वीपा अष्टाविंशतिर्बोध्याः,

---

प्रकारके चार अन्तरद्वीपोंका यह वर्णन है। तात्पर्य ऐसा है कि पहले जो हिमवान और शिखरी पर्वतके आठों छोर लवण समुद्रमें फैले हुवे कहे गये हैं, उनमें एक एक छोर पर ७-७ अन्तरद्वीप हैं, इस प्रकार कुल अन्तरद्वीप ५६ हैं। इनमें प्रथम और द्वितीय नम्बरके अन्तरद्वीपोंका यह वर्णन पूर्वोक्त प्रकारसे ऐसा किया गयाहै, इससे हम जानते हैं कि जिन द्वीपोंका जितना अन्तर है उतनाही उनका आयाम (लम्बाई) और विस्तार है। ऐसे सातवें नम्बरके जो चार अन्तरद्वीप हैं, उनका अन्तर नौसौ योजनका है, और उतनाही उनका आयाम और विस्तार है, इस तरह ये अन्तरद्वीप २८ हैं। यहां मनुष्य युग्मजात हैं, इनकी आयु पल्योपमके असंख्यातवें भागप्रमाण होती है तथा-८०० धनुप प्रमाण शारीरिक ऊँचाई इनकी होती है तथा ऐरवत क्षेत्रका विभाग करनेवाला शिखरी पर्वतकी विदिशाओंमें भी इसी नामके अन्तरद्वीप

---

રીતે બીજા નંબરના ચાર અંતરદ્વીપોનું આ વર્ણન થયુ છે. આ કથનનું તાત્પર્ય આ પ્રમાણે છે—પહેલાં એમ કહેવામાં આવ્યું છે કે હિમવાન્ અને શિખરી પર્વતના આઠે છેડા લવણ સમુદ્રમાં વિસ્તરેલા છે. તે પ્રત્યેક છેડાપર સાત સાત અંતરદ્વીપ છે. આ રીતે કુલ ૫૬ અંતરદ્વીપ છે. તેમાંથી પહેલા અને બીજા નંબરના ચાર ચાર અંતરદ્વીપોનું વર્ણન તો ઉપર મુજબ સમજવું જોઈએ. જે દ્વીપોનું જેટલું અંતર છે, એટલો જ તેમનો આયામ અને વિષ્કંભ છે, આ વાત આગળ પણ પ્રકટ કરવામાં આવેલ છે. આ રીતે સાતમાં નંબરના જે ચાર અંતરદ્વીપો છે, તેમનું છઠ્ઠા નંબરના દ્વીપોથી ૯૦૦-૯૦૦ યોજનનું અંતર છે અને તેમની લંબાઈ-પહોળાઈ પણ ૯૦૦-૯૦૦ યોજનપ્રમાણ જ છે. ક્ષુલ્લહિમવાન્‌ની વિદિશાઓમાં કુલ ૨૮ અંતરદ્વીપો છે, ત્યાં યુગલિકો વસે છે. તેમના શરીરની ઊંચાઇ ૮૦૦ યોજનપ્રમાણ હોય છે, અને તેમનું આયુષ્ય પલ્યોપમના અસંખ્યાતમાં ભાગપ્રમાણ છે. તથા ઐરવતક્ષેત્રના વિભાગો કરનારા શિખરી પર્વતની વિદિશાઓમાં પણ એ જ ક્રમે અને એ જ નામવાળા

अन्तरद्वीपस्फुटीकरणार्थं सङ्ग्रहगाथाः—

" चुल्लहिमवंतपुव्वावरेण विदिसासु सागरं तिसए ।
गतूणंतरदीवा, तिन्नि सए होंति वित्थिन्ना । १ ।
अउणावन्न नवसए, किंचूणे परिहि तेसिमे नामा ।
एगूरुग आभासिय,-वेसाणी चेव नंगूली । २ ।
एएसिं दीवाणं, परओ चत्तारि जोयणसयाइं ।
ओगाहूणं लवणं, सपडिदिसिं चउसयपमाणा । ३ ।
चत्तारंतरदीवा, हयगयगोकन्नसंकुलीकण्णा ।
एवं पंचसयाइं, छसत्तअट्ठेव नव चेव । ४ ।
ओगाहिऊण लवणं, विक्खभोगाहसरिसया भणिया ।
चउरोचउरो दीवा, इमेहिं णामेहिं णेयव्वा । ५ ।
आयंसगमेंढमुहा, अओमुहा गोमुहा य चउरेते ।
अस्समुहा हत्थिमुहा, सीहमुहा चेव वग्घमुहा । ६ ।
तओ अ अस्सकन्ना, हत्थिकन्ना अ कन्नपाउरणा ।
उक्कामुहमेहमुहा, विज्जुमुहा विज्जुदंता य । ७ ।
घणदंतलट्ठदंता, निगूढदंता य सुद्धदंता य ।
वासहरे सिहरिंमिवि, एवंचेव अट्ठवीसावि । ८ ।
अंतरदीवेसु नरा, धणुसय अट्ठूसिया सुइया ।
पालिंति मिहुणधम्मं, पल्लस्स असंखभागाऊ । ९ ।
चउसट्ठि पिट्ठिकरंडयाणि मणुयाणऽवच्चपालया ।
अउणासीइं तु दिणा, चउत्थभत्तेण आहारो । १ ।" इति,

छाया—" क्षुल्लहिमवत्पूर्वापरयोर्विदिक्षु सागरं त्रिशतीम् ।
गत्वाऽन्तरद्वीपास्त्रीणि शतानि भवन्ति विस्तीर्णाः । १ ।
एकोनपञ्चाशन्नवशतं किञ्चिदूनं परिधिस्तेषामिमानि नामानि ।
एकोरुक आभाषिको विषाणी चैव लाङ्गूली । २ ।
एतेषां द्वीपानां परतश्चत्वारि योजनशतानि ।
अवगाह्य लवणं स प्रतिदिक् चतुःशतप्रमाणाः । ३ ।

हैं और वे भी २८ हैं। अन्तरद्वीपोंको स्पष्ट करनेके लिये ये संग्रह-गाथाएं हैं। " चुल्लहिमवंत " इत्यादि १० ॥ सू० ६४ ॥

२८ अंतरद्वीपो आवेला छे. अंतरद्वीपोनी स्पष्टता करनारी संग्रहगाथा आ प्रमाणे छे–" चुल्लहिमवंत " इत्यादि. ॥ सू. ६४ ॥

चत्वारोऽन्तरद्वीपा हयगजगोकर्णशष्कुलीकर्णाः ।
एवं पञ्चशतानि षट्सप्तानि नव चैव । ४ ।
अवगाह्य-लवणं विष्कम्भावगाहसदृशा भणिताः ।
चत्वारश्चत्वारो द्वीपा एभिर्नामभिर्ज्ञातव्या । ५ ।
आदर्शकमेढ्रमुखा अयोमुखा गोमुखाश्च चत्वार एते ।
अश्वमुखा हस्तिमुखाः सिंहमुखाश्चैव व्याघ्रमुखाः । ६ ।
ततश्चाश्वकर्णा हस्तिकर्णाश्च कर्णप्रावरणाः ।
उल्कामुखमेघमुखा विद्युन्मुखा विद्युद्दन्ताश्च । ७ ।
घनदन्त-लष्टदन्ता निगूढदन्ताश्च शुद्धदन्ताश्च ।
वर्षधरे शिखरिण्यपि एवमेव अष्टाविंशतिरपि । ८ ।
अन्तरद्वीपेषु नरा धनुःशताष्टकोच्छ्रिताः सदा मुदिताः ।
पालयन्ति मिथुनधर्मं पल्यस्य असंख्येयभागायुषः । ९ ।
चतुषष्टिपृष्टकरण्डकानि मनुष्याणामपत्यपालनता ।
एकोनाशीतिं तु दिनानि चतुर्थभक्तेन आहारः ।१०।" इति सूत्र ६४॥

अनन्तरसूत्रे जम्बूद्वीपमन्दरदक्षिणादि दिगाश्रयणेन लवणसमुद्रावगाहनयाऽन्तरद्वीपा उक्ताः, सम्प्रति जम्बूद्वीपस्य बाह्यवेदिकामाश्रित्य लवणसमुद्रावगाहनया महापातालादींस्तत्स्थान् देवांश्च तथा लवणस्य प्रस्तुतत्वात्तत्प्रभासिनश्चन्द्रांस्तत्तापिनः सूर्यांश्च, तस्य लवणसमुद्रस्य द्वाराणि द्वारस्थान् देवांश्च प्ररूपयितुमाह—

मूलम्—जंबूदीवस्स णं दीवस्स बाहिरिल्लाओ वेइयताओ चउद्दिसिं लवणसमुद्दं पंचाणउइं जोयणसहस्साइं ओगाहेत्ता एत्थ णं महइमहालया महालिंजरसंठाणसंठिया चत्तारि महापायाला, पण्णत्ता, तं जहा—वलयामुह १, केउए २, जूवए ३,

---

इस प्रकार अन्तरद्वीपोंका और अन्तरद्वीपस्थ मनुष्योंका वर्णन करके अब सूत्रकार जम्बूद्वीपकी बाह्यवेदिकाको लेकर लवण समुद्रको कहां तक उल्लंघन करके पातालकलश कहा है, इस बातका तथा पातालकलशस्थदेवोंका और लवणसमुद्रको प्रभासित करने वाले चन्द्रोंको

---

આ પ્રમાણે અંતરદ્વીપોનું અને અંતરદ્વીપસ્થ મનુષ્યોનું કથન પૂરૂં થયું. હવે સૂત્રકાર એ વાત પ્રકટ કરે છે કે જંબૂદ્વીપની બાહ્યવેદિકાથી શરૂ કરીને લવણ સમુદ્રને ક્યાં સુધી ઓળંગવાથી પાતાળકળશ આવે છે તથા પાતાળ કળસ્થ દેવોનું, લવણ સમુદ્રને પ્રભાસિત કરનારા ચન્દ્રોનું, અને તેમાં તપતા

ईसरे४। एत्थ णं चत्तारि देवा महिड्डिया जाव पलिओवमट्ठिइया परिवसंति, तं जहा–काले१, महाकाले२, वेलंबे३, पभंजणे४।

जंबूद्दीवस्स णं दीवस्स बाहिरिल्लाओ वेइयंताओ चउ-द्दिसिं लवणसमुद्दं बायालीसं २, जोयणसहस्साइं ओगाहेत्ता एत्थ णं चउण्हं वेलंधरनागराईणं चत्तारि आवासपव्वया पण्णत्ता तं, जहा–गोथूभे१, उदयभासे२,संखे३, दगसीमे४। तत्थ णं चत्तारि देवा महिड्डिया जाव पलिओवमट्ठिइया परिवसंति, तं जहा–गोथूभे१, सिवए२, संखे ३, मणोसिलए ४।

जंबूदीवस्स णं दीवस्स बाहिरिल्लाओ वेइयंताओ चउसु विदिसासु लवणसमूद्दं बायालीसं २ जोयणसहस्साइं ओगाहेत्ता अत्थ णं चउण्हं अणुवेलंधरणागराईणं चत्तारि आवासपव्वया पण्णत्ता, तं जहा–कक्कोडए१, विज्जुप्पभे२, केलासे३, अरुणप्पभे ४। तत्थ णं चत्तारि देवा महिड्डिया जाव पलिओवमट्ठिइया परि-वसंति, तं जहा--कक्कोडए १, कद्दमए २, केलासे ३, अरुणप्पभे४। लवणे णं समद्दे चत्तारि चंदा पभासिंसु वा पभासंति वा पभा-सिस्संति वा। चत्तारि सूरिया तविंसु वा तवंति वा तविस्संति वा चत्तारि कत्तियाओ जाव चत्तारि भरणीओ, चत्तारि अग्गी जाव चत्तारि जमा, चत्तारि अंगारा जाव चत्तारि भावकेऊ।

लवणस्स णं समुद्दस्स चत्तारि दारा पण्णत्ता, तं जहा–विजए १, वेजयंते २, जयंते ३, अपराजिए ४। ते णं दारा चत्तारि जोयणाइं विक्खंभेणं तावइया चेव पवेसेणं पण्णत्ता।

तत्थ णं चत्तारि देवा महिड्ढिया जाव पलिओवमट्ठिइया परिवसंति–विजए १, वेजयंते २, जयंते ३, अपराजिए ४॥ सू० ६५॥

छाया–जम्बूद्वीपस्य खलु द्वीपस्य बाह्याद् वेदिकान्ताच्चतुर्दिशि लवणसमुद्रं पञ्चनवतिं २ योजनसहस्राणि अवगाह्य अत्र खलु महातिमहान्तो महालिञ्जरसंस्थानसंस्थिताश्चत्वारो महापातालाः प्रज्ञप्ताः तद्यथा–वडवामुखः १, केतुकः २, यूपकः ३, ईश्वरः ४। अत्र खलु चत्वारो देवा महर्द्धिका यावत् पल्योपमस्थितिकाः परिवसन्ति, तद्यथा–कालः १, महाकालः २, वेलम्बः ३, प्रभञ्जनः ४,

जम्बूद्वीपस्य खलु द्वीपस्य बाह्याद् वेदिकान्ताच्चतुर्दिशि लवणसमुद्रं द्विचत्वारिंशद्योजनसहस्राणि अवगाह्य अत्र खलु चतुर्णां वेलन्धरनागराजानां चत्वार आवासपर्वताः प्रज्ञप्ताः, तद्यथा–गोस्तूपः १, उदकभासः २, शङ्खः ३, दकसीमा ४। तत्र खलु चत्वारो देवा महर्द्धिका यावत् पल्योपमस्थितिकाः परिवसन्ति, तद्यथा–गोस्तूपः १, शिवकः २, शङ्खः ३, मनःशिलकः ४,

जम्बूद्वीपस्य खलु द्वीपस्य बाह्याद् वेदिकान्ताच्चतसृषु विदिक्षु लवणसमुद्रं द्विचत्वारिंशद् २ योजनसहस्राणि अवगाह्य अत्र खलु चतुर्णामनुवेलन्धरनागराजानां चत्वार आवासपर्वताः प्रज्ञप्ताः, तद्यथा–कर्कोटकः १, विद्युत्प्रभः २, कैलासः ३, अरुणप्रभः ४। तत्र खलु चत्वारो देवा महर्द्धिकाः यावत् पल्योपमस्थितिकाः परिवसन्ति, तद्यथा–कर्कोटकः १, कर्दमकः २, कैलासः ३, अरुणप्रभः ४।

लवणे खलु समुद्रे चत्वारश्चन्द्राः प्राभासन्त वा प्रभासन्ते वा प्रभासिष्यन्ते वा। चत्वारः सूर्या अतपन् वा तपन्ति वा तप्स्यन्ति वा। चतस्रः कृत्तिकाः यावत् चतस्रो भरण्यः, चत्वारोऽग्नयः यावत् चत्वारो यमाः, चत्वारोऽङ्गाराः यावत् चत्वारो भावकेतवः।

लवणस्य खलु समुद्रस्य चत्वारि द्वाराणि प्रज्ञप्तानि, तद्यथा–विजयं १, वैजयन्तं २, जयन्तम् ३, अपराजितम् ४, तानि खलु द्वाराणि चत्वारि योजनानि विष्कम्भेण, तावन्त्येव प्रवेशेन प्रज्ञप्तानि। अत्र खलु चत्वारो देवा महर्द्धिकाः यावत् पल्योपमस्थितिकाः परिवसन्ति–विजयः १, वैजयन्तः २, जयन्तः ३, अपराजितः ४॥ सू० ६५॥

---

तापित करनेवाले सूर्योंका लवण समुद्रके द्वारोंका और द्वारस्थदेवोंका प्ररूपण करते हैं। "जंबुद्दीवस्स णं दीवस्स बाहिरिल्लाओ" इत्यादि—

---

સૂર્યોનું, લવણ સમુદ્રનાં દ્વારોનું અને દ્વારસ્થ દેવોનું પણ હવે સૂત્રકાર નિરૂપણ કરે છે—" जंबुदीवस्स णं दीवस्स बाहिरिल्लाओ " ઈત્યાદિ—

टीका—' जंबूदीवस्स णं " इत्यादि–स्पष्टम् ,

" एत्थ णं " इति–अत्र–मध्यमेषु दशसु योजनसहस्रेषु चत्वारः–चतुःसंख्यकाः महातिमहान्तः–महाविशालाः महाऽलिञ्जरसंस्थानसंस्थिताः–महांश्चासौ अलिञ्जरो–जलघटो महाऽलिञ्जरो=बृहज्जलघटः, तस्य संस्थानेन–आकारेण संस्थिताः महाऽलिञ्जरसंस्थानसंस्थिताः=महाजलकुम्भाऽऽकाराः महापाताला:– पातालवदगाधत्वात् पातालव्यवस्थितत्वाद्वा पातालाः, महान्तश्च ते पातालाश्चेति तथा, पातालकलशाः चत्वारः प्रज्ञप्ताः, तद्यथा–वडवामुखः १, केतुकः २, यूपकः ३, ईश्वरः ४, श्चेति । एते क्रमेण पूर्वादिदिक्चतुष्टये बोध्याः । मुखे–मूले चैते दशयोजनसहस्राणि विस्तीर्णाः, मध्ये च लक्षयोजनपरिमाणाः, एषामुपरितनभागे केवलं जलं, मध्यभागे पवनजलोभयम्, मूले वायुरेव, एतेषु वायुकुमाराः कालप्रभृतयो देवा निवसन्ति, अत्र गाथाः—

" पणनउइ सहस्साइं, ओगाहित्ताण चउद्दिसिं लवणं ।
चउरोऽलिंजरसंठाणसंठिया होंति पायाला । १ ।

टीकार्थ–जम्बूद्वीप नामके द्वीपकी बाह्यवेदिकान्तसे चारों दिशाओंमें लवण समुद्रको ९५–९५ हजार योजन प्रमाण लांघकर आगत स्थानपर अधिकाधिक चार पातालकलश हैं, ये पातालकलश एक बहुविस्तृत घडेके जैसे आकारवाले हैं । इनके नाम इस प्रकार हैं—वडवामुख १, केतुक २, यूपक ३ और ईश्वर ४ । ये चार पातालकलश क्रमशः पूर्वादि चार दिशाओंमें हैं । इनका मुख और मूल भागका विस्तार दस हजार योजनका है, मध्य भागका विस्तार एक लाख योजनका है । इनके ऊपर के भागमें केवल जल है, मध्य भाग में पवन और जल ये दोनों हैं । मूल भागमें केवल वायुही हैं । इनमें काल प्रभृति वायुकुमारदेव रहते हैं । उक्त भी है—" पणनउइ सहस्साइं " इत्यादि.

જંબૂદ્વીપ નામના દ્વીપની બાહ્યવેદિકાના અન્ત ભાગથી ચારે દિશાઓમાં લવણ સમુદ્રને ૯૫-૯૫ હજાર યોજનપ્રમાણ ઉલ્લંઘિત (પાર) કરવાથી જે સ્થાન આવે છે, તે સ્થાનપર ચાર ખૂબ જ વિશાળ પાતાળકળશ છે. તેમનો આકાર વિસ્તૃત ઘડાના આકાર જેવો છે. તેમનાં નામ આ પ્રમાણે છે—(૧) વડવામુખ, (૨) કેતુક, (૩) યૂપક અને (૪) ઈશ્વર. તે ચાર કળશ અનુક્રમે પૂર્વાદિ ચાર દિશાઓમાં છે. તેમના મુખ અને મૂળભાગનો વિસ્તાર દશ હજાર યોજનનો છે, અને મધ્યભાગનો વિસ્તાર એક લાખ યોજનનો છે. તેમના મૂળભાગમાં માત્ર વાયુ જ છે. તેમાં કાલપ્રભૃતિ વાયુકુમાર દેવોનો નિવાસ છે, કહ્યું પણ છે કે " પણનઉઇ સહસ્સાઇં " ઇત્યાદિ—

वलयामुह केऊए, जूयग तह इस्सरे य बोद्धव्वे ।
सव्ववइरामया णं कुड्डा एएसिं दससइया । २ ।
जोयणसहस्सदसगं, मूले उवरिं च होंति विच्छिण्णा ।
मज्झे य सयसहस्सं, तत्तियमेत्तं च ओगाढा । ३ ।
पलिओवमट्ठिईया, एएसिं अहिवई सुरा इणमो ।
काले य महाकाले, वेलंव पभंजणे चेव । ४ ।
अन्नेवि य पायाला, खुड्डालिंजरसंठिया लवणे ।
अट्ठसया चुलसीया, सत्त सहस्सा य सव्वेवि । ५ ।
जोयणसयविच्छिन्ना, मूलुवरिं दस सयाणि मज्झंमि ।
ओगाढा य सहस्सं, दस जोयणिया य सिं कुड्डा । ६ ।
पायालाण विभागा, सव्वाणवि तिन्नि तिन्नि बोद्धव्वा ।
हेट्ठिमभागे वाऊ, मज्झे वाऊ य उदयं च । ७ ।
उवरिं उदगं भणियं, पढमगवीएसु वाउ संखुभिओ ।
वामे उदगं तेण य, परिवड्ढइ जलनिही खुहिओ । ८ ।
परिसंठियंमि पवणे, पुणरवि उदयं तमेव संठाणं ।
वच्चेइ तेण उदही, परिहायइ णुक्कमेणेवं । ९ । ” इति,

छाया—“ पञ्चनवतिं सहस्राणि अवगाह्य चतुर्दिशि लवणम् ।
चत्वारोऽलिञ्जरसंस्थानसंस्थिता भवन्ति पातालाः । १ ।
वडवामुखः केतुकः यूपकस्तथा ईश्वरश्च बोद्धव्यः ।
सर्वे वज्रमयाः खलु कुडयानि एतेषां दशशतानि । २ ।
योजनसहस्रदशकं मूले उपरि च भवन्ति विस्तीर्णाः ।
मध्ये च शतसहस्रं तावन्मात्रं चावगाढाः । ३ ।
पल्योपमस्थितिका एतेषामधिपतिसुरा इमे ।
कालश्च महाकालो वेलम्बः प्रभञ्जनश्चैव । ४ ।
अन्येऽपि च पातालाः क्षुद्रालिञ्जरकसंस्थिता लवणे ।
अष्टशतानि चतुरशीतिः सप्त सहस्राणि च सर्वेऽपि । ५ ।
योजनशतविस्तीर्णा मूलोपरि दश शतानि मध्ये ।
अवगाढाश्च सहस्रं दश योजनानि चैषां कुडयानि । ६ ।
पातालानां विभागाः सर्वेषामपि त्रयस्त्रयो बोध्याः ।
अधस्तनभागे वायुः मध्ये वायुश्च उदकं च । ७ ।
उपरि उदकं भणितं प्रथमक-द्वितीययोः वायुः संक्षुभितः ।
वमति उदकं तेन च परिवर्धते जलनिधिः क्षुब्धः । ८ ।

परिसंस्थिते पवने पुनरपि उदकं तदेव संस्थानम् ।
व्रजति तेन उदधिः परिहीयतेऽनुक्रमेणैवम् ।९।" इति,

आसां गाथानामयमर्थः—

लवणसमुद्रं चतुर्दिशि पञ्चनवतिसहस्राणि पञ्चनवतिसहस्राणि योजनानि अवगाह्य मध्ये अलिञ्जरसंस्थानसंस्थिताश्चत्वारः पातालाः=पातालकलशा भवन्ति ।१। एतेषां पातालकलशानां नामानि-वडवामुखः केतुकः यूपकः ईश्वरश्चेति बोध्यानि। एते च क्रमेण पूर्वादिदिक्चतुष्टये भवन्ति । एते सर्वेऽपि वज्रमया बोध्याः । एतेषां कुडयानि=भित्तयश्च दशशतयोजनप्रमाणानि भवन्ति ॥ २ ॥ एते पातालकलशा मूलभागे उपरिभागे च दशसहस्रयोजनानि विस्तीर्णा भवन्ति, मध्यभागे तु शतसहस्रयोजनानि=लक्षयोजनानि विस्तीर्णा भवन्ति । तथा चैते लक्षयोजनानि अवगाढाः लक्षयोजनावगाढाः समतलादधोभागे भवन्ति ।३। एतेषां वडवामुखादीनाम् अधिपतिसुराः पल्योपमस्थितिका भवन्ति । ते चेमे बोध्याः, तथाहि—कालो १ महाकालो २ वेलम्बः ३ प्रभञ्जनः ४, इति ॥ ४ ॥ पूर्वोक्ताः पातालकलशा

इस गाथाओंका अर्थ इस प्रकारसे है—चारों दिशाओंकी ओर लवण समुद्रमें ९५-९५ हजार योजन आगे जाकर बीचमें घटके जैसे आकारवाले चार पातालकलश हैं। इनके नाम-वलयमुख, केतुक, यूपक, ईश्वर हैं, ये क्रमशः पूर्वादि चार दिशाओंमें हैं। ये सब वज्रमय हैं, इनकी दिवालें एक हजार योजनप्रमाण हैं। ये पातालकलश मूल भागमें और ऊपरके भागमें दश दश हजार योजन विस्तृत हैं। मध्य भागमें इनका विस्तार एक २ लाख योजनका है, और अवगाहना भी एक लाख २ योजन है। इन कलशों के अधिपति देव १-१ पल्योपम की स्थितिवाले होतें हैं। इन देवोंके नाम-काल, महाकाल, वेलम्ब, और प्रभञ्जन हैं, ये पूर्वोक्त

આ ગાથાઓનો અર્થ આ પ્રમાણે છે—જબૂદ્વીપના બાહ્યવેદિકાન્તથી ચારે દિશા તરફ લવણ સમુદ્રમાં ૯૫-૯૫ હજાર યોજનનું અંતર કાપવાથી લવણ સમુદ્રની વચ્ચે ઘડાના જેવા આકારના ચાર પાતાળકળશ આવે છે. તેમનાં નામ—વલયમુખ, કેતુક, યૂપક અને ઈશ્વર છે. તેઓ ક્રમશઃ પૂર્વ, દક્ષિણ, પશ્ચિમ અને ઉત્તરમાં છે તેઓ વજ્રનિર્મિત છે. તેમની દિવાલો એક હજાર યોજનપ્રમાણ ઊંચી છે. તે પાતાળકળશોના મૂળભાગ ( તળિયું ) અને મુખભાગનો વિસ્તાર ૧૦-૧૦ હજાર યોજનનો છે અને મધ્યભાગનો વિસ્તાર એક લાખ યોજનનો છે, અને અવગાહના પણ એક એક લાખ યોજનની છે તે કળશોના અધિપતિ દેવોનાં નામ કાળ, મહાકાળ, વેલમ્બ અને પ્રભંજન છે. તેમની સ્થિતિ એક પલ્યોપમની છે. આ પાતાળ કળશો ખૂબ જ વિસ્તાર-

महालिञ्जरसंस्थानसंस्थिताः । ततोऽन्येऽपि क्षुद्रालिञ्जरसंस्थानसंस्थिताः पातालकलशा लवणसमुद्रे बोध्याः । एते सर्वे तु सप्तसहस्राणि अष्टशतानि चतुरशीतिश्च संख्यया बोध्याः ॥ ५ ॥ मूलभागे उपरिभागे चैते शतयोजनानि विस्तीर्णाः, मध्ये च दशशतयोजनानि विस्तीर्णाः, अवगाढाश्चैते सहस्रयोजनानि । दशयोजनप्रमाणानि त्वेषां कुड्यानि विज्ञेयानि ॥ ६ ॥ सर्वेषां पातालानां त्रयस्त्रयो विभागा बोद्धव्याः । तत्राधस्तने भागे वायुस्तिष्ठति, मध्ये वायुरुदकं च तिष्ठति । ॥७॥ उपरिभागे पुनरुदकं तिष्ठति । तत्र प्रथम-द्वितीयभागयोः संक्षुभितो वायुरुदकं वमति । तेनोदकवमनेन च क्षुब्धो जलनिधिः परिवर्धते=वृद्धिं याति ॥८॥ ततः पवने परिसंस्थिते=क्षोभावस्थां परित्यज्य पूर्वस्थितिं गते सति उदकमपि पुनः तदेव संस्थानं=स्वपूर्वस्थितिं व्रजति=गच्छति । तेन हेतुना उदधिः एवम् अनुक्रमेण परिहीयते=हानिं गच्छतीति ॥ ९ ॥

---

पातालकलश विशाल आकारवाले हैं । यहां इनसे अतिरिक्त और भी छोटे-छोटे कलशके जैसे आकारवाले पातालकलश हैं । ये सब ७ हजार ८ सौ चौरासी हैं । मूल भागमें और ऊपरके भागमें सौ योजन विस्तार-वाले ये हैं । मध्यमें एक हजार योजन विस्तार वाले हैं ।

इनकी अवगाहना एक हजार योजनकी है, तथा दश योजन प्रमाणकी दीवाले हैं । समस्त पातालोंके तीन तीन विभाग हैं । नीचेके भागमें वायु रहता है, मध्यभागमें वायु और उदक दोनों रहते हैं, और ऊपरके भागमें उदकरहता है । प्रथम द्वितीय भाग में संक्षुभित वायु उदकको उछालता है, इस उदकके उछलनेसे क्षुब्ध जलधि वृद्धिको प्राप्त होता है, तथा जब वायु अपनी क्षुब्ध अवस्थाका परित्यागकर पूर्व

---

વાળા છે, ત્યાં આ ચાર મહાકળશો ઉપરાંત બીજાં પણ ૭૮૦૦ નાના મોટા પાતાળકળશો છે. તેમના મૂળ ભાગ અને મુખભાગનો વિસ્તાર ૧૦૦૦ યોજનનો છે. તેમની અવગાહના પણ ૧૦૦૦ યોજનની છે, અને તેમની દીવાલ ૧૦ યોજન પ્રમાણ ઊંચી છે. બધાં પાતાળકળશોના ત્રણ-ત્રણ વિભાગ પડે છે. નીચેના ભાગમાં વાયુ રહે છે, વચ્ચેના ભાગમાં વાયુ અને પાણી રહે છે. નીચેના અને મધ્યના ભાગમાં રહેલો ક્ષુબ્ધ વાયુ પાણીને ઉછાળે છે, આ રીતે પાણી ઉછળવાથી ક્ષુબ્ધ થયેલા સાગરના પાણીની વૃદ્ધિ થાય છે, અને જ્યારે વાયુ ક્ષુબ્ધાવસ્થાનો પરિત્યાગ કરીને પોતાની પૂર્વસ્થિતિમાં આવી જાય છે,

" एत्थ णं चउण्हं वेलंधरनागराईणं " इत्यादि—अत्र खलु चतुर्णां वेलन्धर-नागराजानां–वेलां–लवणसमुद्रशिखामन्तः प्रविशन्तीं बहिर्वा निःसरन्तीमग्रशिखां च धारयन्तीति वेलन्धराः ' संज्ञात्वादयं साधुः, ते च ते नागराजाश्च वेलन्धर-नागराजाः=वेलन्धरनागकुमारा इत्यर्थः, तेषाम् आवासपर्वताः–निवासस्थानरूपाः पर्वताः चत्वारः प्रज्ञप्ताः, ते यथा–गोस्तूपः १, उदकभासः २, शङ्खः ३, उदक-सीमा ४, एते क्रमेण पूर्वादिदिक्चतुष्टये बोध्याः। तत्र क्रमेण गोस्तूप–शिवक–शङ्ख-मन' शिलक नामानो महर्द्धिका यावत्पल्योपमस्थितिकाश्चत्वारो देवा वसन्तीति।

स्थितिमें आजाता है–तब जल भी अपनी पूर्वस्थितिमें आजाता है, इस कारण उदधिमें ज्वार–भाटा शान्त होजाता है ॥ १ । ९ ॥

" एत्थणं चउण्हं " इत्यादि—

लवण समुद्रकी शिखाको, भीतर–बाहिर निकलती हुई अग्रशि-खाको जो धारण करते हैं वे वेलन्धर हैं। यहाँ इस व्युत्पत्तिके अनुसार " वेलान्धर " ऐसा पद होना चाहिये था पर ऐसा न होकर जो वेलन्धर ऐसा प्रयोग हुवा है उसका कारण इसका शब्दहोना है। ये वेलन्धर नागराज हैं। ऐसे इन वेलन्धर नागकुमारोंके आवास पर्वत निवास स्थानरूप पर्वत चार कहे गये हैं, जैसे–गोस्तूप १, उदकभास २, शङ्ख ३ और उदकसीमा४ ये चारों आवास पर्वत क्रमशः पूर्वादि चार दिशामें हैं इन आवास पर्वतोंपर क्रमशः–गोस्तूप, शिवक, शङ्ख और मनःशि-लक, इन नामोंके चार महर्द्धिक यावत् पल्योपम स्थितिवाले देव रहते

ત્યારે પાણી પણ પોતાની પૂર્વસ્થિતિમા આવી જાય છે તે કારણે સમુદ્રમાં આવેલી ભરતી શમી જાય છે. ॥ સૂ. ૧ થી ૯ ।

" एत्थणं चउण्हं " ઈત્યાદિ—

લવણ સમુદ્રની અંદર અને બહાર નીકળતી એવી વેલાને ( અગ્રશિખાને ) જેઓ ધારણ કરે છે, તેમને વેલન્ધર કહે છે. આ વ્યુત્પત્તિ અનુસાર " વેલાન્ધર " પદ બનવું જોઈએ, પણ એવું ન થતાં જે ' વેલન્ધર ' પદ બન્યુ છે, તેનું કારણ એ છે કે તેમનું નામ જ વેલન્ધર છે.

તે વેલન્ધર નાગરાજ છે. એવાં તે વેલન્ધર નાગકુમારોના નિવાસસ્થાન રૂપ આવાસ પર્વતો ચાર કહ્યા છે. તેમનાં નામ આ પ્રમાણે છે—(૧) ગોસ્તૂપ, (૨) ઉદકભાસ, (૩) શંખ અને (૪) ઉદકસીમા. તે ચારે આવાસ પર્વતો અનુક્રમે પૂર્વાદિ દિશાઓમાં છે તે આવાસપર્વતો પર અનુક્રમે ગોસ્તૂપ, શિવક, શંખ અને મનઃશિલક નામના ચાર મહર્દ્ધિક આદિ વિશેષણોવાળા અને એક પલ્યોપમની સ્થિતિવાળા દેવો રહે છે.

"जंबूदीवस्स णं" इत्यादि—स्पष्टम्, नवरं-विदिक्षु-ऐशान्यादिकोणेषु अनुवेलन्धरनागराजानां-वेलन्धराणां पश्चात्स्थायिनोऽनुनायकत्वेन ये सन्ति तेऽनुवेलन्धराः, ते च ते नागराजाश्च, तथाभूतानाम्, वेलन्धरवक्तव्यतागाथाः—

"दसजोयणसहस्सा, लवणसिहा चक्कवालओ रुंदा।
सोलससहस्सउच्चा, सहस्समेगं तु ओगाढा। १।
देसूणमद्धजोयण, लवणसिहोवरि दगं तु कालदुगे।
अइरेगं अइरेगं, परिवड्ढइ हायए वावि। २।
अब्भितरियं वेलं, धरेंति लवणोदहिस्स नागाणं।
बायालीससहस्सा, दुसत्तरि सहस्स बाहिरियं। ३"
सट्ठिं नागसहस्सा, धरिंति अग्गोदगं समुद्दस्स।
वेलंधरआवासा, लवणे य चउद्दिसिं चउरो। ४।

हैं। "जंबुद्दीवस्स णं" इत्यादि. स्पष्ट है, अर्थात् जम्बूद्वीपकी बाह्यवेदिकाके अन्तसे चारों विदिशाओंमें ४२-४२ हजार योजन लवणसमुद्रको उल्लंघन करके आगत स्थानपर चार अनुवेलन्धर नागराजोंके कर्कोटक१' विद्युत्प्रभ २, कैलास ३ और अरुणप्रभ ४ नामके चार आवास पर्वत हैं। इनमें चार महर्द्धिकदेव यावत् २ पल्योपमकी स्थितिवाले रहतेहैं। उनके नाम इस प्रकारसे हैं-कर्कोटक १ कर्दमक २, कैलास ३, और अरुणप्रभ ४-ये अनुवेलन्धर नागराज वेलन्धरनागराजों के पीछे रहते हैं इसलिये अनुनायकके रूपमें होनेके कारण अनुवेलन्धर कहे गये हैं। वेलन्धर वक्तव्यता गाथाएं यों हैं—

"दस जोयणसहस्सा" आदि. इन गाथाओंका अर्थ—लवणसमुद्रका अग्रभाग मण्डलाकारसे दस हजार योजनका विस्तारवाला है, १६ हजार

"जबुद्दीवस्स णं" ઇત્યાદિ—જંબૂદ્વીપની બાહ્યવેદિકાના અન્તભાગથી ચારે વિદિશાઓમાં ૪૨-૪૨ હજાર યોજનપ્રમાણુ અંતર લવણુ સમુદ્રમાં ઉલ્લંઘવાથી જે સ્થાન આવે છે ત્યાં ચાર અનુવેલન્ધર નાગરાજોના (૧) કર્કોટક, (૨) વિદ્યુત્પ્રભ, (૩) કૈલાસ અને (૪) અરુણુપ્રભ નામના ચાર આવાસ પર્વતો છે. તેમાં એક પલ્યોપમની સ્થિતિવાળા અને મહર્દ્ધિક આદિ કર્કોટક, કર્દમક, કૈલાસ અને અરુણુપ્રભ નામના ચાર દેવો નિવાસ કરે છે. અનુનાયક હોવાને કારણે જ અનુવેલન્ધર નાગરાજો વેલન્ધર નાગરાજોની પાછળ રહે છે.

વેલન્ધરવું પ્રતિપાદન કરતી ગાથાઓ આ પ્રમાણે છે—"दस जोयण सहस्सा" ઇત્યાદિ. તેમનો અર્થ આ પ્રમાણે છે—લવણુ સમુદ્રની અગ્રભાગ

पुव्वाइअणुक्कमसो, गोथुभदगभाससंखदगसीमा ।
गोथुभ-सिवए-संखे मणोसिले नागरायाणो । ५ ।

छाया—" दशयोजनसहस्राणि लवणशिखा चक्रवालतो विस्तीर्णा ।
षोडशसहस्रोच्चा सहस्रमेकं त्ववगाढाः । १ ।
देशोनमर्द्धयोजनं लवणशिखोपरि दकं तु कालद्विके ।
अतिरेकमतिरेकं परिवर्धते हीयते वाऽपि । २ ।
आभ्यन्तरिकीं वेलां धारयन्ति लवणोदधेः नागानाम् ।
द्वाचत्वारिंशत्सहस्राणि द्वासप्ततिसहस्राणि बाह्याम् । ३ ।
षष्टिर्नागसहस्राणि धारयन्त्यग्रोदकं समुद्रस्य ।
वेलन्धराऽऽवासा लवणे च चतुर्दिशि चत्वारः । ४ ।
पूर्वाद्यनुक्रमशः गोस्तूप-दकभास-शङ्ख-दकसीमाः ।
गोस्तूपः शिवकः शङ्खो मनःशिलो नागराजाः । ५ । " इति,

अयमर्थः-लवणशिखा-लवणसमुद्रस्य अग्रभागः चक्रवालतो मण्डलाकारेण दशसहस्रयोजनानि विस्तीर्णा, षोडशसहस्रयोजनोच्चा, समभूमिभागापेक्षया, एकसहस्रयोजनप्रमाणाऽवगाढा च बोध्या । १ । लवणशिखाया उपरि कालद्विके= दिवसे रात्रौ च देशोनार्द्धयोजनप्रमाणं दकं-जलम् अतिरेकम् अतिरेकम्=अधिकमधिकं परिवर्धते हीयतेऽपिवा । २ । नागकुमाराणां द्वाचत्वारिंशत्सहस्राणि लवणोदधेः आभ्यन्तरिकीम्=अन्तर्विशन्तीं वेलां धारयन्ति, तथा-तेषां नागकुमाराणां द्विसप्तति सहस्राणि बाह्यां=बहिर्गच्छन्तीं वेलां धारयन्ति । ३ । षष्टिसहस्रसंख्यका नागकुमाराः समुद्रस्य=लवणसमुद्रस्य अग्रोदकं=शिखाग्रं धारयन्ति । तत्र

---

योजन ऊंचा है तथा समतलसे एक हजार योजन अवगाहनवाला है। जलशिखाके ऊपर दिन रात कुछ कम अर्धयोजन प्रमाणसे जल बढता घटता रहता है । लवणोदधिकी आभ्यन्तर वेलाको ४२ हजार नागकुमार और बाह्य वेलाको ७२ हजार नागकुमार धारण करते हैं, एवं ६० हजार नागकुमार लवणसमुद्र शिखाके अग्रभागको धारण करते हैं । उक्त लवण

---

મંડલાકારે દસ હજાર યોજનની છે, ૧૬ હજાર યોજન ઊંચી છે, તથા સમતલથી હજાર યોજનની અવગાહનાવાળી છે જલશિખા પર ( સપાટી પર ) દિવસે અને રાત્રે અર્ધયોજન કરતાં કંઈક ન્યૂન પ્રમાણમાં પાણીની સપાટીમાં વૃદ્ધિ અને હાનિ થતી રહે છે.

લવણ સમુદ્રની આભ્યન્તર વેલાને ( પાણીની વૃદ્ધિને ) ૪૨ હજાર નાગકુમારો અને બાહ્યવેલાને ૭૨ હજાર નાગકુમારો ધારણ કરે છે, અને ૬૦ હજાર નાગકુમારો લવણસમુદ્ર શિખાના ( વેલાને ) અગ્રભાગને ધારણ કરે

लवणसमुद्रे चतुर्दिशि चत्वारो वेलन्धराऽऽवासाः सन्ति । ४ । ते हि पूर्वादिनुक्रमशः=पूर्वादिदिगनुक्रमेण गोस्तूप-दकभास - शङ्ख - दकसीमनामानो बोध्याः । तेषु क्रमेण गोस्तूप शिवक शङ्ख-मनःशिलनामानश्चत्वारो वेलन्धरराजा वसन्तीति॥५॥

" जंबुद्दीवस्स णं " इत्यादि—स्पष्टम् । नवरं विदिक्षु=ऐशान्यादिकोणेषु अनुवेलन्धरनागराजानां=वेलन्धराणां पश्चात्स्थायिनोऽनुनायकत्वेन ये सन्ति तेऽनुवेलन्धराः, ते च ते नागराजाश्च तेषां तथाभूतानामिति ॥

अनुवेलन्धरनागराजवक्तव्यतागाथास्तु—

" अणुवेलंधरवासा, लवणे विदिसासु संठिया चउरो ।
कक्कोडे विज्जुप्पभे, केलासेऽरुणप्पभे चेव । १ ।
कक्कोड य कद्दमए, केलासेऽरुणप्पभे य रायाणो ।
बायालीससहस्से, गंतुं उदहिंमि सव्वे वि । २ ।
चत्तारि जोयणसए, तीसे कोसे च उग्गया भूमिं ।
सत्तरसजोयणसए, इगवीसे ऊसिया सव्वे । ३ ।"

छाया—" अनुवेलन्धरवासा लवणे विदिक्षु संस्थिताश्चत्वारः ।
कर्कोटो विद्युत्प्रभः कैलासोऽरुणप्रभश्चैव । १ ।
कर्कोटकः कर्दमकः कैलासोऽरुणप्रभश्च राजानः ।
द्विचत्वारिंशत् सहस्राणि गत्वा उदधौ सर्वेऽपि । २ ।
चत्वारि योजनशतानि त्रिंशतं क्रोशांश्च उद्गताभूमिम् ।
सप्तदश योजनशतानि एकविंशतिमुच्छ्रिताः सर्वे ।३। " इति

अयमर्थः—लवणसमुद्रे विदिक्षु=ऐशान्यादिषु क्रमेण संस्थिताः कर्कोटक-

---

समुद्रमें चारों दिशाओंमें पूर्वादि क्रमसे चार वेलन्धरावास गोस्तूप १, दकभास २, शङ्ख ३, दकसीम ४ हैं, जिनमें—गोस्तूप, शिवक, शङ्ख, मनःशिल चार नामके वेलन्धरराज रहते हैं–५ ।

अनुवेलन्धर नागराज वक्तव्यता विषयिणी गाथाएं—" अणुवेलन्धरवासा " इत्यादि. इन गाथाओंके अर्थ—लवण समुद्रमें ईशान

---

છે આ લવણ સમુદ્રની ચારે દિશાઓમાં પૂર્વાદિ ક્રમથી ચાર વેલન્ધરાવાસ આવેલા છે તેમના નામ આ પ્રમાણે છે—(૧) ગોસ્તૂપ, (૨) દકભાસ, (૩) શંખ અને (૪) દકસીમ. તેમાં અનુક્રમે ગોસ્તૂપ, શિવક, શંખ અને મનઃશિલ નામના વેલન્ધરરાજ નિવાસ કરે છે. અનુવેલન્ધર નાગરાજની વક્તવ્યતાનું નિરૂપણ કરતી ગાથાઓઃ–" अणुवेलंधरवासा " ઇત્યાદિ—આ ગાથાઓનો ભાવાર્થ નીચે પ્રમાણે છે—

विद्युत्प्रभ-कैलासाऽरुणप्रभनामानश्चत्वारोऽनुवेलन्धरावासाः सन्ति ।१। तेषु क्रमेण कर्कोटक-कर्दमक-कैलासाऽरुणप्रभनामानश्चत्वारो नागराजा निवसन्ति। एते सर्वेऽप्यावासा लवणसमुद्रे द्विचत्वारिंशत्सहस्राणि योजनानि गत्वा सन्ति ।२। तत्र चैते चत्वारि योजनशतानि त्रिंशतं क्रोशांश्चाभिव्याप्य भूमिम् उद्गताः= भूमौ व्यवस्थिताः। तथा-ते सर्वे एकविंशत्यधिकसप्तदशशतयोजनानि उच्छ्रिताः= उच्चा बोध्याः। ३। इति।

"लवणे समुद्दे णं" इत्यादि—लवणे समुद्रे चत्वारश्चन्द्राः प्राभासन्त वा प्रभासन्ते वा प्रभासिष्यन्ते। तथा-लवणसमुद्रे चत्वारः सूर्या अतपन् वा तपन्ति वा तप्स्यन्ति वा, चन्द्राणां शीतलकिरणत्वेन सौम्यदीप्तिकत्वाद् वस्तुप्रभासनं प्रोक्तं सूर्याणां तु प्रचण्डकिरणत्वान्नसौम्यदीप्तिकत्वमिति तेषां न तदुक्तम्,

चन्द्राणां चतुष्ट्वेन तत्परिवारस्यापि नक्षत्रादेश्चतुष्ट्वमेवेत्याह-चत्तारि कत्तियाओ" इत्यादि-चतस्रः कृत्तिकाः, अत्र चतुष्ट्वं च नक्षत्रापेक्षया नतु तारकापे-

आदिविदिशाओंमें क्रमसे कर्कोटक, विद्युत्प्रभ, कैलास, अरुणप्रभ ये अनुवेलन्धर आवास हैं, इनमें कर्कोटक १, कर्दम २, कैलास ३, अरुणप्रभ ४ नामा चार नागराज रहतेहैं। ये आवास पर्वत लवण समुद्रमें ४२ हजार योजन जा करके हैं। ये ४०० योजन और ३० कोशतक भूमिको घेर कर स्थित हैं। १७२१ योजन ऊंचे हैं। लवण समुद्रमें चार चन्द्रमा हैं, वे लवण समुद्रमें प्रकाशित हुवे हैं होते है और होंगें।

तथा-चार सूर्य वहां तपे है अब भी तपतेहैं और आगे आगे तपेगे। चन्द्र शीतल, और सूर्यप्रखर किरणेवाले होते हैं। इसलिये यहां वे चन्द्र वस्तुका प्रकाशन करते हैं, ऐसा कहा है तथा-सूर्य प्रचण्ड किरणके कारण तपते हैं ऐसा कहा गया है। चन्द्र चतुष्टयके परिवार नक्षत्रादि भी यहां चार रूपमें हैं, इसी बातको सूत्रकारने "चत्तारि कत्तियाओ"

લવણ સમુદ્રમાં ઇશાન આદિ વિદિશાઓમા અનુક્રમે કર્કોટક, વિદ્યુત્પ્રભ, કૈલાસ અને અરુણપ્રભ નામના નાગરાજ રહે છે. તે આવાસ પર્વતો લવણ સમુદ્રમાં ૪૨ હજાર યોજન દૂર જવાથી આવે છે. તેઓ ૪૦૦ યોજન અને ૩૦ કોસ જેટલી ભૂમિને ઘેરીને ઊભા છે. તેમની ઊંચાઇ ૧૭૨૧ યોજન છે.

લવણસમુદ્રમાં ચાર ચન્દ્રમા છે તેઓ ભૂતકાળમાં તેને પ્રકાશ દેતાં હતા, વર્તમાનમાં પણ દે છે અને ભવિષ્યમાં પણ દેશે. ત્યાં ચાર સૂર્ય તપતાં હતાં, તપે છે અને તપશે ચન્દ્ર શીતલ કિરણોવાળો અને સૂર્ય ઉષ્ણ કિરણો વાળો હોય છે. તેથી અહીં એવું કહ્યું છે કે ચન્દ્રો પ્રકાશ આપે છે અને સૂર્યો પ્રચંડ કિરણોને કારણે તાપ આપે છે. ચાર ચન્દ્રના પરિવાર રૂપ નક્ષત્રાદિ

क्षयेति, एवं रोहिण्यादि भरण्यन्तानामपि नक्षत्रापेक्षयैव चतुष्टं विज्ञेयम्, 'यावत्' -पदेन रोहिण्यादि भरण्यन्तानि अष्टाविंशति नक्षत्राणि ग्राह्याणि ।

"चत्तारि अग्गी" इत्यादि-कृत्तिकादि भरण्यन्तानामष्टाविंशतिनक्षत्राणां देवताः क्रमेण अग्निमारभ्य यमपर्यन्ता अष्टाविंशतिसंख्यका बोध्याः । तासु प्रत्येकं देवता चतुःस्थानकानुरोधेन चतुर्विधा बोध्या ।

सम्प्रति लवणसमुद्राकाशस्थितानां ग्रहाणां मध्ये एकैकस्या-चतुष्कमुपदर्शयितुमाह-" चत्तारि अंगारा " इत्यादि । तत्र अङ्गारः प्रथमो ग्रहः, भावकेतुस्तु अष्टाशीतितमः । नक्षत्र देवताग्रहाणां नामानि द्वितीयस्थानकस्य चतुस्त्रिंशत्तमे सूत्रेऽवलोकनीयानि ।

---

इत्यादि सूत्र द्वारा प्रगट किया है-यहां चार २ कृत्तिकाएं हैं, यहां जो चतुष्टयता है वह नक्षत्रोंकी अपेक्षासे है, नारकोंकी अपेक्षासे नहीं । इसी तरह-रोहिणीसे भरणीतकमें नक्षत्रोंकी अपेक्षासेही चारचार जानना चाहिये ।

यहां यावत् पदसे रोहिणीसे लेकर भरणी तकके २८ नक्षत्र ग्रहण कहे गये हैं । " चत्तारि अग्गी " इत्यादि—

कृत्तिकासे लेकर भरणी तकके जो २८ नक्षत्र हैं, उनके देवता क्रमशः अग्निसे लेकर यम तक २८ हैं । इनमें प्रत्येक देवता चतुःस्थानकके अनुरोधसे चार प्रकारके हैं ऐसा समझना चाहिये ।

अब सूत्रकार लवण समुद्रके अवकाशमें स्थित ग्रहोंके मध्यमें एक एक ग्रहमें चारचार प्रकार दिखानेके लिये "चत्तारि अंगारा" इत्यादि सूत्र कहते हैं । इनमें अङ्गार प्रथम ग्रहहैं और भावकेतु ८८ वा ग्रहहै । नक्षत्र, देवता,

---

પણ ત્યાં ચાર ચાર રૂપ છે એ જ વાત સૂત્રકારે " चत्तारि कत्तियाओ " ઇત્યાદિ સૂત્ર દ્વારા પ્રકટ કરી છે. ત્યાં જે ચતુષ્ટયતા છે તે નક્ષત્રોની અપેક્ષાએ છે, નારકોની અપેક્ષાએ નથી. જેમકે ત્યાં ચાર કૃતિકાઓ છે, એ જ પ્રમાણે રોહિણીથી લઇને ભરણી પર્યન્તનાં નક્ષત્રોમાં પણ ચતુષ્ટયતા સમજવી. અહીં યાવત્ (પર્યન્ત) પદથી રોહિણીથી લઇને ભરણી સુધીના ૨૮ નક્ષત્રો ગ્રહણ કરવામાં આવ્યાં છે.

" चत्तारि अग्गी " ઇત્યાદિ—કૃત્તિકાથી શરૂ કરીને ભરણી સુધીના ૨૮ નક્ષત્રો છે, અનુક્રમે અગ્નિથી લઇને યમ પર્યન્તના તેમના ૨૮ દેવતાઓ છે. તેમાંના પ્રત્યેકનો દેવતા ચતુઃસ્થાનકના અનુરોધથી ચાર પ્રકારનો છે, એમ સમજવું. હવે સૂત્રકાર લવણ સમુદ્રના અવકાશમાં જે જે ગ્રહો રહેલા છે, તે પ્રત્યેક ગ્રહમાં ચતુષ્ટયતાનું પ્રતિપાદન કરવા નિમિત્તે " चत्तारि अंगारा " ઇત્યાદિ સૂત્ર કહે છે—અંગારક (મંગળ) પહેલો ગ્રહ છે, અને ભાવકેતુ ૮૮

"लवणस्स णं समुद्दस्स" इत्यादि–लवणस्य समुद्रस्य चत्वारि द्वाराणि प्रज्ञप्तानि, तानि यथा–विजयादीनि ४, इत्यादि सर्वं जम्बूद्वीपद्वारादिवदवसेयमिति। सू० ६५॥

द्वीपप्रकरणाद् धातकीखण्डद्वीपस्य वलयप्रमाणादि निरूपयितुमाह—

**मूलम्--धायइसंडे दीवे चत्तारि जोयणसयसहस्साइं चक्कवालविक्खंभेणं पण्णत्ते जंबुद्दीवस्स णं दीवस्स बाहिरिया चत्तारि भरहाइं, चत्तारि एरवयाइं, एवं जहा--सद्दुद्देसए तहेव निरवसेसं भाणियव्वं जाव चत्तारि मंदरा चत्तारि मंदरचूलियाओ ।सू०६६॥**

छाया—धातकीखण्डो द्वीपश्चत्वारि योजनशतसहस्राणि चक्रवालविष्कम्भेण प्रज्ञप्तः, जम्बूद्वीपस्य खलु द्वीपस्य वहिः चत्वारि भरतानि, चत्वारि ऐरवतानि, एवं यथा शब्दोद्देशके तथैव निरवशेषं भणितव्यं यावत् चत्वारो मन्दराः, चतस्रो मन्दरचूलिकाः। सू० ६६॥

टीका—"धायइसंड" इत्यादि—चक्रवालविष्कम्भेण–चक्रवालः=मण्डलं-

---

ग्रह इनके नाम द्वितीयस्थानकके ३४ वे सूत्रमें कहे गयेहैं, अतः-वहांसे देख लेना चाहिये। "लवणस्स णं समुद्दस्स" इत्यादि. लवण समुद्रके द्वार चार कहे गये हैं जैसे–विजय १, वैजयन्त २, जयन्त ३ और अपराजित ४। द्वार सम्बन्धी और सब कथन जम्बूद्वीप द्वारोंकी तरह जानना। सू. ६५

द्वीपप्रकरणको लेकर अब सूत्रकार धातकीखण्ड द्वीपके वलय प्रमाण आदि वक्तव्यताका निरूपण करनेके लिये सूत्र कहते हैं।

"धायइसंडे दीवे चत्तारि" इत्यादि—

धातकीखण्ड द्वीप चक्रवाल विष्कम्भकी अपेक्षा चार लाख योज-

---

મો ગ્રહ છે. નક્ષત્ર, દેવતા અને ગ્રહોનાં નામ દ્વિતીય સ્થાનકના ૩૪ માં સૂત્રમાં આપ્યાં છે, તો ત્યાંથી વાંચી લેવા.

"लवणस्स णं समुद्दस्स" ઈત્યાદિ—

લવણુ સમુદ્રના ચાર દ્વાર છે—(૧) વિજય, (૨) વૈજયન્ત, (૩) જયન્ત અને (૪) અપરાજિત. દ્વાર વિષેનું બાકીનું સમસ્ત કથન જંબૂદ્વીપના દ્વારાના કથન અનુસાર સમજવું. ॥ સૂ. ૬૫ ॥

દ્વીપ પ્રકરણુના સંબંધને અનુલક્ષીને હવે સૂત્રકાર ધાતકીખંડ દ્વીપના વલયપ્રમાણુ આદિનું નિરૂપણુ કરે છે. "धायइसंडे दीवे चत्तारि" ઈત્યાદિ—

वलय इत्यर्थः, तस्य विष्कम्भः-विस्तारश्चक्रवालविष्कम्भस्तेन चत्वारि योजनशतसहस्राणि-चतुर्लक्षयोजनपरिमितो धातकीखण्डनामा द्वीपः प्रज्ञप्तः।

" जंबूदीवस्स णं " इत्यादि—जम्बूद्वीपस्य खलु द्वीपस्य बहिः-बहिः प्रदेशे स्थितयोः - धातकीखण्ड-पुष्करार्द्धयोर्द्वीपयोश्चत्वारि भरतानि ऐरवतानि च सन्तीति बोध्यम्। " एवं जहे "-त्यादि-एवम्-अनेन प्रकारेण, यथा=यया रीत्या, शब्दोद्देशके-शब्दोपलक्षितः=भरतैरवतादिशब्दोपलक्षितः उद्देशकः शब्दोद्देशकः=द्वितीयस्थानकस्य तृतीयोद्देशकः, तत्र भरतैरवतादि-मन्दरचूलिकान्तानां द्विस्थानकत्वेन वर्णनं कृतं, तथैव-भरतादिमन्दरचूलिकान्तं निरवशेषं-सर्वं चतुःस्थानकत्वेन भणितव्यम्। तत् कियदवधि वक्तव्यमित्याह सूत्रकारः-" जाव चत्तारि मंदरा " इत्यादि-" चत्वारो मन्दराश्चतस्रो मन्दरचूलिका " इतिपर्यन्तमित्यर्थः। सू० ६६।

---

नका विस्तारवाला कहा गया है। यह जम्बूद्वीपके बाहर प्रदेशमें स्थित है, अर्थात्-सबसे प्रथम द्वीप जम्बूद्वीप है, इसको चारों ओरसे लवण समुद्र वेष्टित कर रक्खा है। जम्बूद्वीपसे दुगुना विस्तार लवण समुद्रका और लवणसमुद्रसे दुगुना धातकीखण्ड द्वीप है, इसके चारों ओर समुद्र है। इसके बाद पुष्करवरद्वीप है। जम्बूद्वीपमें एक भरतक्षेत्र, एक ऐरवत क्षेत्र आदि क्षेत्र हैं। धातकीखण्डमें दो-भरत दो ऐरवत आदि क्षेत्र हैं, इसी प्रकार पुष्करार्धमें दो भरत आदि क्षेत्र हैं। इस तरह जैसा कथन भरत, ऐरवत आदिका द्वितीय स्थानकके तृतीय उद्देशमें मन्दरचूलिका तक है, वैसाही चतुःस्थान रूपसे यहां कहना

---

ધાતકીખંડ દ્વીપનો ચક્રવાલ વિષ્કંભ (પરિધ-પરિમિત) ચાર લાખ યોજનનો કહ્યો છે તે જંબૂદ્વીપથી બહારના પ્રદેશમાં આવેલો છે. એટલે કે સૌથી પહેલો જંબૂદ્વીપ છે. તેની ચારે તરફ વીંટળાઈને રહેલો લવણ સમુદ્ર છે. જંબૂદ્વીપ કરતાં લવણ સમુદ્રનો વિસ્તાર બમણો છે, અને લવણસમુદ્ર કરતાં ધાતકીખંડદ્વીપનો વિસ્તાર બમણો છે. તેની ચારે બાજુ પણ સમુદ્ર આવેલો છે ત્યારબાદ પુષ્કરવરદ્વીપ આવે છે. જંબૂદ્વીપમાં ભરત, ઐરવત આદિ ક્ષેત્ર એક એક છે, પણ ધાતકી ખંડમાં ભરત, ઐરવત આદિ ક્ષેત્રો બબ્બે છે. એ જ પ્રમાણે પુષ્કરાર્ધમાં પણ ભરત આદિ ક્ષેત્રો બબ્બે છે. બીજા સ્થાનકના ત્રીજા ઉદ્દેશામાં ભરત, ઐરવત આદિ ક્ષેત્રોનું મન્દર ચૂલિકા પર્યન્તનું જેવું કથન કરવામાં આવ્યું છે,' એવું જ કથન ચતુઃસ્થાન રૂપે અહીં પણ થવું

